# श्रीभागवत-
# सहस्रनामस्तोत्रम्



# श्रीभागवत-सहस्रनामस्तोत्रम्

संकलयिता
छन्दोबद्धकर्ता प्रकाशकश्च
डा० बटोही झा
साहित्य-व्याख्याता

केन्द्रीय-संस्कृत-विद्यापीठम्, लखनऊ

# नैवेद्यम्

'श्रीमद्भागवतस्य दशमस्कन्धस्य साहित्यकं समीक्षणमिति नामधेये स्वशोध-प्रबन्धे दशमस्कन्धपद्येषु श्रीकृष्णस्य मधुरमधुरैर्विशेषणैराक्षिप्तचेतसा मया तस्य विशेषणसम्बोधनपर्यायपदानां संकलनं कृतम्। तेषाञ्च सहस्राधिका संख्या जाता। तदैव मनसि निश्चितं यत्काले चैतेषां छन्दोबन्धनं करिष्ये। तदेवेदानीं प्रस्तुतम्।

अस्मिन् छन्दोबन्धने सम्बोधनपदानामपि प्रथमान्त-प्रयोगः कृतः। यद्यप्यत्र सहस्रनामसंकलनरीतिः प्रारब्धा किन्तु द्व्यक्षरपदानां तथाभावात् छन्दोनियमपालनाय कृष्णेति पदं बहुशः प्रयुक्तं वैवश्यात्। अन्ते चानुष्टुभि केषाञ्चित् पदानामयुक्त्या आर्यावृत्तमवलम्बितम्।

–क्वचित्-क्वचित् सुस्वेति तथा
स्वयमिति च योजनया छन्दः–
–पूर्तिः कृता

एतत्सर्वं श्रीकृष्णेच्छया जातमिति मन्ये। भावये चात्र सहृदयैर्भाविकैश्च विद्वद्भिः शीघ्रतावशादनवधानादज्ञानद्वा जातं स्खलितं स्वयमेव संशोधनीयं जनस्यास्य सूचनीयञ्च। नैवेद्येनानेन सहृदयहृदयविहारी वृन्दाविपिनचारी प्रियतामिति सन्देशेन श्रीभागवतसहस्रनामावली प्रस्तौति—

भगवत्प्रपन्नः

अक्षयतृतीया
वि० सं० २०४६

डा० बटोही झा

## श्रीराधाराधिताय नमः

### परीक्षिदुवाच

तथाश्रीकृष्णवृत्तं मे कलिकल्मषनाशनम् ।
सहस्रश्रवणं नाम्नां पावनं वद यन्मुने ॥

### श्रीशुक उवाच

श्रीकृष्णचरितं दिव्यं श्रीमद्भागवते तथा ।
निरोधे दशमस्कन्धे शुद्धिः प्रीतिर्हृदो यतः ॥

विशेषणतया तत्र नाम्नः सन्ति सहस्रधा ।
पदानि कलनं तेषां काले कोऽपि करिष्यति ॥

ॐ अजनश्चाष्टमो गर्भः क्रीडाश्रान्तश्च केशवः ।
अनुग्रहोऽरविन्दाक्षः क्रीडामनुजबालकः ॥१॥

अम्बुजाक्षोऽखिलात्मा च कैवल्याद्यखिलप्रदः ।
अज्ञोऽनुमेयवर्त्मा च कन्दमूलफलाशनः ॥२॥

अजोऽभयाश्रयात्मा च कृष्णश्चकार्यमानुषः ।
अनन्तोऽव्यक्तबन्धुश्च कृतागाः केवलः कविः ॥३॥

अन्तर्गतोऽभवोऽनीहः कालनाभोऽम्बुजेक्षणः ।
अगुणोऽविक्रियोऽगध्रः कालः कमललोचनः ॥४॥

केवलानुभवानन्दस्वरूपः कृतविग्रहः ।
क्रोशसंजातहासश्च कान्तः कृताभिवादनः ॥५॥

अन्तकः कालियग्रस्तः कालचक्रायुधोऽव्ययः ।
अभिज्ञोऽकुण्ठमेधाश्च कृतशौचोऽद्भुतार्भकः ॥६॥

क्रीडामानुषरूपी च कूटस्थोऽशेषशेखरः ।
अर्थी कमलपत्राक्षः क्रान्तत्रिभुवनोऽक्रियः ॥७॥

अखिललोकनाथश्च कम्बुकण्ठोऽकुतोभयः ।
अखिललोकसाक्षी च कृतासनपरिग्रहः ॥८॥

अध्यक्षोऽव्याहतैश्वर्यो कालात्मा कामदोऽसमः ।
अमृतोऽगाधबोधश्च कामी कारणमानुषः ॥९॥

अदान्तात्मा कृतात्मा च कुमारः करुणोऽनघः ।
कालावयवसाक्षी च कुहकः कितवोऽजितः ॥१०॥

अक्षरोऽध्यात्मदीपश्च कृतोद्यमोऽखिलेश्वरः ।
असुरद्विडकूपारः कुलपतिरधोक्षजः ॥११॥

अनन्तशक्तिरव्यक्तः कामपूरोऽभिरक्षिता ।
अच्युतोऽमिततेजाश्च कृतघ्नोऽनङ्गदीपनः ॥१२॥

अङ्गोऽरविन्दनेत्रश्च कृतज्ञोऽर्जुनसारथिः ।
अतिप्रियोऽभिजातश्च कूजितवेणुरद्वयः ॥१३॥

अप्राकृतोऽनिरुद्धश्च किशोरोऽशेषदृक् तथा ।
अभ्रवपुरविश्वश्च कृतसंवन्दनोऽर्चितः ॥१४॥

अधीशोऽजस्रचित्यात्मा कारुणिकोऽतिसुन्दरः ।
एकोऽजस्रसुखश्चैव कल्याणोऽनाथसंश्रयः ॥१५॥

अविकारोऽप्रमेयश्च कूटयोधी गदाग्रजः ।
अर्थितोऽदृष्टचेष्टश्च कल्किरूपी गुणालयः ॥१६॥

अव्याकृतविहारश्च गुणात्मा गोकुलेश्वरः ।
अमित्रहा गुणद्रष्टा गोविन्दोऽनन्तशक्तिधृक् ॥१७॥

गूढोऽप्रतिभयश्चैव गीतवेणुरविस्मितः ।
अमरोऽद्भुतकर्मा च खरदण्डधरोऽशनिः ॥१८॥

अयनोऽक्लिष्टकारी च गोवर्धनधरोऽगृहः ।
देवोऽमोघविहारश्च गोपगोकुलनन्दनः ॥१९॥

गोपालोऽरिदमश्चैव गोपीयुतोऽन्तरात्मदृक् ।
असितोऽधःशयानश्च दयितोऽखिलदृक् तथा ॥२०॥

इन्द्रोऽम्बुदसखाचैव गीतकीर्तिरखण्डितः ।
गुहाशयोऽविषह्यश्च ह्यकृतकालशक्तिधृक् ॥२१॥

अप्रमत्तोऽद्वितीयश्च तुर्योऽरण्यजनप्रियः ।
अद्भुतविक्रमोऽमानी चानुरताबलागणः ॥२२॥

अनिमिषोऽखिलावासस्तोकोऽरविन्दलोचनः ।
अधीश्वरोऽनुलिप्ताङ्गस्तातोऽवरुद्धसौरतः ॥२३॥

अभ्यर्थितोऽभयारावस्तनयोऽमित्रशातनः ।
ईश्वरोऽचलभूतिश्च गुणास्पदोऽभिरम्भितः ॥२४॥

अनुगेडितकीर्तिश्च गुणातीतोऽरिकर्षणः ।
ईशोऽयत्नहतारिश्च तोषितोऽमोघविक्रमः ॥२५॥

अनन्योऽक्लिष्टकर्मा च दाशार्होऽबुरूहेक्षणः ।
दामोदरोऽप्रमेयात्मा दुर्दर्शोऽमोघवाञ्छितः ॥२६॥

अमलपादरेणुश्च गोपोत्सङ्गोपबर्हणः ।
दंशितोऽक्तचेताश्च नर्मदो नन्दनन्दनः ॥२७॥

गुणहीनोऽपवर्गेशो दन्तपाणिश्च दुर्जयः ।
अनार्द्रधीर्दुराराध्यो गर्भजगदसंवृतः ॥२८॥

अखिलहेतुहेतुश्च नित्यो दारुकसारथिः ।
उपेन्द्रोऽद्भुतसिंहश्च दुष्प्रापस्तडिदम्बरः ॥२९॥

उदारचेष्टितो दान्तो देवदेवो दुरत्ययः ।
नाथोऽनन्तसखश्चैव नन्दसूनुर्नवप्रियः ॥३०॥

अव्ययात्माऽब्जनाभश्च पूर्णोऽमोघगतिः परः ।
दर्पघ्नोऽकुण्ठधामा च प्रेष्ठोऽलब्धमणिः पतिः ॥३१॥

जनार्दनो जगन्नाथोऽपास्ततमोभिदाभ्रमः ।
अभीष्टोऽनन्तमूर्तिश्च प्रीतोऽखिलगुरुर्मुनिः ॥३२॥

अंसन्यस्तविषाणश्च गजदन्तवरायुधः ।
अकामोऽनन्यदर्शी च घनश्यामो घृणार्दितः ॥३३॥

पान्थोऽतिसुकुमाराङ्गश्चामरवर्यशर्मकृद् ।
गुणात्मच्छादनो बालश्चानुक्रोशस्मितेक्षणः ॥३४॥

वीरोऽविषक्तदृष्टिश्च रामोऽक्षतबलो विभुः ।
विश्वोऽखिलात्महेतुश्च प्रभुर्दुष्टनिबर्हणः ॥३५॥

शान्तोऽपीच्यवयाश्चैव प्रवृत्तः परदैवतः ।
वत्सपालोऽनवद्यात्मा प्रपन्नार्तिहरः पुमान् ॥३६॥

निवृत्तोऽस्पष्टवर्त्मा च नटवरवपुर्हरिः ।
अनतिरिक्तदृष्टिश्च विष्णुः परममङ्गलः ॥३७॥

सत्योऽपवर्गसम्पच्च पावनः प्रणतार्तिहा ।
अहेतुरतिदूरस्थो नन्दगोपसुतः शिशुः ॥३८॥

शुद्धोऽव्याहतदृक्चैव नारायणो निरायुधः ।
अमलहृद्विभाव्यश्च दृष्टकृतेन विस्मितः ॥३९॥

अनात्माऽमलकीर्तिश्च नरलोकमहोत्सवः ।
श्यामोऽमृतकीर्तिश्च सिद्धार्थः सात्वतां पतिः ॥४०॥

अरूपी लब्धसंस्कारो विश्वात्मा लोकभावनः ।
कारणमर्त्यमूर्तिश्च नियुद्धकुशलो रथी ॥४१॥

आत्मसुखानुभूतिश्च निर्जितो निगमावनः ।
आत्तलीलातनुश्चैव गीयमानकथामृतः ॥४२॥

आद्यश्चात्मप्रदीपश्च नानाक्रीडापरिच्छदः ।
आत्मदश्चादिभूतश्च पुण्यश्लोकशिखामणिः ॥४३॥

ऋषभश्चात्तचक्रश्च निर्गुणो नाप्तयौवनः ।
आसीनश्चात्मवस्तुश्च पुरुषश्चाशिषां पतिः ॥४४॥

आत्मा चामीलिताक्षश्च पुरस्त्रीजनवल्लभः ।
आत्मात्मा चार्तबन्धुश्च नवकञ्जारुणेक्षणः ॥४५॥

आत्मारामो गवामिन्द्रः प्रशान्तश्चादिपूरुषः ।
आत्मरतो रमोपेतो रमास्पदो रमापतिः ॥४६॥

आधिहा चाप्तकामश्च गोपगोधनसंवृतः ।
आत्माश्रयो महाभागश्चात्तमनुष्यविग्रहः ॥४७॥

आत्मप्रियो हृषीकेशश्चात्मलब्धो जगन्मयः ।
स्रष्टा चानन्दमूर्तिश्च निष्किञ्चनजनप्रियः ॥४८॥

आत्मतन्त्रः स्वतल्पस्थो नृसिंहो नरदारकः ।
आदृतगी रमानाथो रावणान्तकरः पिता ॥४९॥

आर्यपुत्रो महावीरो निगमश्चार्तिनाशनः ।
आदिबीजो मणिग्रीवो मुकुन्दो मधुसूदनः ॥५०॥

आत्मार्पितश्च सान्त्वज्ञश्चात्मदैवः पराजितः ।
आत्मस्वामी जगद्धेतुर्जगदात्मा जगत्पतिः ॥५१॥

इष्टभर्ता च भूतात्मा भ्रात्रेयो भक्तवत्सलः ।
ईड्यमानो निरीहश्च निखिलात्मा निरञ्जनः ॥५२॥

ईशिता पृश्निगर्भश्च पूर्णकामः प्रसादितः ।
समश्चेडितवेणुश्च वरदो वृजिनार्दनः ॥५३॥

सूक्ष्मः कारणमत्स्यश्च मातुलेयो महोदयः ।
शरणश्चेडितः साक्षी सकलात्मा सनातनः ॥५४॥

ईशानः परमात्मा च विश्वपतिरीशचेष्टितः ।
घृणीच्छात्तवपुश्चैव देहभागीश्वरेश्वरः ॥५५॥

श्यामलश्चोत्तमश्लोकः शार्ङ्गधन्वा शुचिस्मितः ।
उदाररुचिरक्रीडो दिव्यस्रग्गन्धमण्डितः ॥५६॥

सर्वंश्चोपात्तदण्डश्च वेधा देववरार्चितः ।
उदासीनः स्वयंज्योतिः स्वरतिश्चोपसंगतः ॥५७॥

पुराणश्चोरुगायश्च परेशश्चोपलालितः ।
उपदेशपदः शास्ता श्रीवत्सः श्रीनिकेतनः ॥५८॥

उरुक्रमो मृषाश्रुश्च मन्दो मन्मथमन्मथः ।
उपगतो गदाभृच्च गुरुश्च गरुडध्वजः ॥५९॥

उरुश्रवा विदग्धश्च शङ्खचक्रगदाधरः ।
उपासीनश्च सर्वज्ञः सगोगोपालकः सखा ॥६०॥

उदासीनः सुहृद् स्रग्वी स्नातः सर्वेश्वरेश्वरः ।
स्तब्धश्चोद्विग्नचेताश्च समानः सर्वदर्शनः ॥६१॥

शौरिश्चोदात्तचक्रश्च चारुकर्णश्चतुर्भुजः ।
उत्तमपुरुषो हृष्टो हयशीर्षा हुतानलः ॥६२॥

एकमूर्तिर्महात्मा च माधवो महतां गतिः ।
श्रीकमलोदराङ्घ्रिश्च भीतवदेकहायनः ॥६३॥

स्वात्मा कृतावतारश्च तथोपश्रुतसत्कथः ।
श्रान्तः कैवल्यनाथश्च गोगोकुलपतिर्जडः ॥६४॥

क्षित्युद्धारविहारश्च तथा त्रिभुवनेश्वरः ।
बन्धुर्गोपालसूनुश्च गतिविज्जगदीश्वरः ॥६५॥

गूढस्वात्मानुभूतिश्च गोपरूपी जगद्गुरुः ।
गुणवृत्त्युपलक्ष्यश्च जाम्बूनदपरिष्कृतः ॥६६॥

गोपिकानन्दनो भर्ता भक्तानामभयंकरः ।
भृत्यवित्रासहा भृत्यो भगवान् भक्तभक्तिमान् ॥६७॥

धर्मज्ञो गरुडारूढः स्वगलशोभिकौस्तुभः ।
बृहद्गुणप्रदीपश्च स्वगोपीनयनोत्सवः ॥६८॥

बुद्धो गजेन्द्रलीलश्च स्वगोपीपरिषद्गतः ।
वद्धो गृहीतपादश्च प्राकृतः परमेश्वरः ॥६९॥

भीरुर्गृहीतपद्मश्च गुप्तबोधो बुभुक्षितः ।
ब्रह्म गोपपरीतश्च पुण्यश्रवणकीर्तनः ॥७०॥

प्रेयान् गृहीतचित्तश्च प्रसन्नः पुरुषोत्तमः ।
भूमा गुणैकधामा च स्वभयविह्वलेक्षणः ॥७१॥

मर्त्यो गृहीतशक्तिश्च चारुजानुयुगस्तथा ।
गोपीगुरुः फलात्मा च मास्यः फाल्गुनसंयुतः ॥७२॥

गोपीगतिर्बकारिश्च प्रियकृच्चलसौहृदः ।
द्युमा चराचरात्मा च चित्रकथो यथाश्रुतः ॥७३॥

चारुहासो विभूमा च वासुदेवो वृषाकपिः ।
मृत्युश्चर्चितसंकल्पश्चराचरगुरुस्तथा ॥७४॥

चक्रायुधो रमेशश्च रङ्गगतो रसप्रदः ।
योगो जगन्निवासश्च जगद्गुरुपिता तथा ॥७५॥

जातहर्षो हृदिस्थश्च तथा जलरुहाननः ।
जनयिता स्वदृग्घेतुः स्वैरवर्ती सुरेश्वरः ॥७६॥

जातहासो विमोहश्च वामनो विश्वमोहनः ।
श्रीजगदात्मकेतश्च प्रश्रयावनतस्तथा ॥७७॥

कृष्णो जननिवासश्च तथा त्यक्तनृपासनः ।
तावद्विचित्ररूपश्च तावद्रूपधरस्तथा ॥७८॥

कृष्णस्तुलसिदामा च दर्शनीयतमस्तथा ।
देवकीजन्मवादश्च दुष्टकृतेन विस्मितः ॥७९॥

धर्मविद् देवकीपुत्रो रमणो देवकीसुतः ।
योगेशो दुस्त्यजद्वन्द्वो विश्वात्मा दुरवग्रहः ॥८०॥

दैत्यदानवमोही च धृताद्रिप्रवरस्तथा ।
कृष्णो दुरवबोधश्च दुरापगतिरीश्वरः ॥८१॥

दुर्विषहोग्रतेजाश्च सुदृशिमन्महोत्सवः ।
दृप्तक्षत्रवनच्छेत्ता दैवहतो यदूत्तमः ॥८२॥

धूलिधूसरिताङ्गश्च धर्मवक्ता व्रजस्पतिः ।
नारायणसमः कृष्णो वृषणो धर्मगुप्तनुः ॥८३॥

प्राक्सिद्धो निष्प्रपञ्चश्च वत्सपो नरपुङ्गवः ।
निगूढात्मगतिश्चैव नित्यप्रमुदितस्तथा ॥८४॥

नानावादानुरोधश्च नृविडम्बो महाभुजः ।
वन्यस्रक् निम्ननाभिश्च नृलोकनिरतस्तथा ॥८५॥

नित्यप्रियः शरण्यश्च नरवरो मुदावहः ।
कृष्णो नरवरश्रेष्ठः सुनिजकामसंप्लुतः ॥८६॥

नरसखः सभार्यश्च निस्तीर्णारिबलार्णवः ।
कृष्णो नृलिङ्गगूढश्च निष्किचनः परोद्भवः ॥८७॥

विपश्चिन्नलिनाभश्च विश्वकृत्पुष्करेक्षणः ।
पीताम्बरस्त्रिसत्यश्च बालिशः परपूरुषः ॥८८॥

कृष्णः परावरात्मा च प्रियपतिश्च सुव्रतः ।
परावरगतिज्ञश्च प्रद्युम्नः परवीरहा ॥८९॥

परवान् प्रश्रयानम्रः प्रलयाब्धिचरस्तथा ।
पुण्यगन्धानुलिप्ताङ्गः परपुमान् महारथः ॥९०॥

प्रणतक्लेशनाशश्च सुप्राकृतशिशुस्तथा ।
कृष्णः परमकल्याणः प्रियतमः प्रियङ्करः ।९१॥

मायी पण्डितमानी च स्वपशुपैः परिश्रितः ।
कृष्णः पुरुषमौलिश्च मानदः पशुपाङ्गजः ॥६२॥

मित्रध्रुक् परमानन्दः पूर्णब्रह्म सुहृत्तमः ।
कृष्णः परमवेधा च पुण्ययशाश्च शत्रुहा ॥६३॥

प्रीतमनाः सदारश्च सुपीतवसनस्तथा ।
कृष्णः पुरुषसारश्च परभूतश्च बन्धुहा ॥६४॥

कृष्णः प्रमाणमूलश्च तथा प्रहसिताननः ।
पीतकौशेयवासाश्च तथा पुरुषभूषणः ॥६५॥

पीताम्बरधरश्चैव कृष्णः पितृवत्सलः ।
प्रेम्णेक्षितस्त्र्यधीशश्च पद्मपत्रारुणेक्षणः ॥६६॥

पुरुषेशप्रधानश्च सुपरिपृष्टबान्धवः ।
परतत्त्वश्च सर्वात्मा स्वप्रपन्नभयापहः ॥६७॥

पुराणपुरुषः कृष्णस्तथा प्रणतवत्सलः ।
प्रश्रयावनतश्चैव परतन्त्रो बृहद्वपुः ॥६८॥

कृष्णः पङ्कजनाभश्च यज्ञभुक् पुरुषर्षभः ।
स्वजनः पूर्णबोधश्च पुराणपुरुषस्तथा ॥९९॥

कृष्णः पङ्कजमाली च प्रभविष्णुर्बृहद्भुजः ।
लीलानरवपुश्चैव परमेष्ठी सुदुर्मतिः ॥१००॥

कृष्णः पङ्कजनेत्रश्च पङ्कजाङ्घ्रिश्च साग्रजः ।
फुल्लदृक् बालकेलिश्च ब्रह्माद्वयश्च सानुगः ॥१०१॥

मधुद्विट् पुरुषव्याघ्रो बद्धबर्हः स्वबान्धवः ।
कृष्णः परावरेशश्च सबलो वलसंयुतः ॥१०२॥

बहुमूर्तिश्च सर्वेशो बालद्विरदविक्रमः ।
श्रीमान् ब्रह्ममयश्चैव स्वबद्धोलूखलस्तथा ॥१०३॥

श्रीपतिर्ब्रह्मलिङ्गश्च मृदुपद्भूतभावनः ।
कृष्णो ब्रह्मण्यदेवश्च महाकारुणिकस्तथा ॥१०४॥

मुक्तो भग्नार्जुनश्चैव तथा भुवनसुन्दरः ।
भाराक्रान्तो महायोगी तथा भुवनमङ्गलः ॥१०५॥

विराड् भूतपतिश्चैव भक्तप्रियो विमुक्तिदः ।
भूतावासः स्वसंविच्च सुभिक्षुश्लाघितस्तथा ॥१०६॥

स्वाश्रयो भिन्नसेतुश्च कृष्णो भृगुपतिस्तथा ।
सुमुखो भूरिभोजश्च भूरिकारी च सर्वदृक् ॥१०७॥

कृष्णो मायामनुष्यश्च स्ववशो भुवनेश्वरः ।
क्षेत्रज्ञो मर्त्यलिङ्गश्च महापुरुषलक्षणः ॥१०८॥

महामणिगणाकीर्णो योगमायामुपाश्रितः ।
सुमनुजार्भमायी च मत्तद्विरेन्द्रविक्रमः ॥१०९॥

स्वस्तिमान् मायिमायी च स्वमायामनुजस्तथा ।
कृष्णो मायार्भकश्चैव स्वयदुकुलपांसनः ॥११०॥

शान्तात्मा मौनशीली च कृष्णो मधुपतिस्तथा ।
महेन्द्रमदभिच्चैव कृष्णो मणिधरस्तथा ॥१११॥

कृष्णो मुदितवक्त्रश्च विश्वदृक् मूर्त्तिमान् स्मरः ।
मधुकैटभमृत्युश्च कृष्णो योगेश्वरेश्वरः ॥११२॥

कृष्णो मन्दरधारी च वरवारणविक्रमः ।
कृष्णो महाविभूतिश्च वृष्णिचक्रावृतस्तथा ॥११३॥

कृष्णो महानुभावश्च वृक्षमूलाश्रयस्तथा ।
यशोदानन्दसूनुश्च सुमर्त्यानुविधस्तथा ॥११४॥

विश्वविद्यादवेन्द्रश्च स्वदृक् सर्वगुहाशयः ।
कृष्णो यादवदेवश्च वृन्दावनचरस्तथा ॥११५॥

साध्यात्मो यदुदेवश्च कृष्णो यज्ञपतिस्तथा ।
कृष्णो रतिविशेषज्ञो यदुपतिर्विचक्षणः ॥११६॥

कृष्णो लीलामनुष्यश्च कृष्णश्च यदुनन्दनः ।
कृष्णो विहर्तुकामश्च तथैव रुचिरेक्षणः ॥११७॥

यदुराजस्तथा कृष्णो योगाधींशो विहारविद् ।
राज्ञाहूतस्तथा कृष्णः सर्वलोकैकपालकः ॥११८॥

रघुवर्यस्तथा कृष्णः साधुलोकभयापहः ।
कृष्णो लोकरिरक्षुश्च कृष्णो रामानुजस्तथा ॥११९॥

लोकनाथस्तथा कृष्णः स्वानामभयदस्तथा।
कृष्णो लोकगुरुश्चैव कृष्णश्च लोकपावनः ॥१२०॥

लोककल्पस्तथा कृष्णो व्रजगोवत्सलस्तथा।
कृष्णो लावण्यधामा च वनिताशतयूथपः ॥१२१॥

लुब्धधर्मा तथा कृष्णो वर्ष्मधुर्यगतिस्तथा।
लज्जागुप्तस्तथा कृष्णो वलिमत्पल्लवोदरः ॥१२२॥

कृष्णो विश्वेश्वरश्चैव वत्सपुरस्सरस्तथा।
विदिताखिलचित्तज्ञः कृष्णो वरदराड्तथा ॥१२३॥

वाच्यवाचकशक्तिश्च कृष्णो व्रजसुखावहः।
कृष्णो विनिर्मिताशेषविशेषकल्पनस्तथा ॥१२४॥

विश्वकर्ता तथा कृष्णः शङ्खगदार्युदायुधः।
कृष्णः श्रीवत्सलक्ष्मा च कृष्णो व्रजजनार्तिहा ॥१२५॥

विश्वहेतुस्तथा कृष्णो वसुदेवसुतस्तथा।
कृष्णो वर्णाश्रमात्मा च कृष्णश्च विबुधोत्तमः ॥१२६॥

कृष्णो विचित्रवेषश्च सुव्रजेशसुतस्तथा ।
विप्रदेवस्तथा कृष्णः सर्वदेवमयस्तथा ॥१२७॥

स्वविश्वशरणाङ्घ्रिश्च स्मयमानमुखाम्बुजः ।
कृष्णो व्युदस्तमायश्च स्वप्रतिविम्बविभ्रमः ॥१२८॥

विशुद्धज्ञानमूर्तिश्च कृष्णो वनचरस्तथा ।
सुवनचित्रमाल्यश्च कृष्णश्च विश्वसम्भवः ॥१२९॥

कृष्णश्च वदतां श्रेष्ठः सुवराहवपुस्तथा ।
वृष्णिधुर्यस्तथा कृष्णः सर्वक्षेत्रविकारविद् ॥१३०॥

सुवसुदेवपुत्रश्च कृष्णश्च विरजोऽम्बरः ।
वृजिनघ्नस्तथा कृष्णः स्वसकलाभयप्रदः ॥१३१॥

कृष्णश्च वनमाली च कृष्णश्च विश्वभावनः ।
कृष्णो विज्ञानमात्रश्च सर्वलोकेश्वरेश्वरः ॥१३२॥

कृष्णो विश्वाश्रयश्चैव सुकपोलारुणाधरः ।
स्वविश्वबीजयोनिश्च सर्वभूताशयालयः ॥१३३॥

स्वविजयसखा कृष्णः सर्वभूतसमस्तथा ।
व्रजनाथस्तथा कृष्णः सान्द्रपयोदसौभगः ।।१३४।।

विदितार्थस्तथा कृष्णः सर्वविद्याप्रवर्तकः ।
विमनस्कस्तथा कृष्णस्त्रिलोकेशपतिस्तथा ।।१३५।।

शेषसंज्ञस्तथा कृष्णः शुद्धभावप्रसादितः ।
कृष्णः शास्त्रशरीरी च श्रिय एकान्तवल्लभः ।।१३६।।

श्रुतमात्रस्तथा कृष्णः शरदम्बुरूहेक्षणः ।
श्रद्धितात्मा तथा कृष्णः स्त्रीजितः श्यामसुन्दरः ।।१३७।।

शास्त्रयोनिस्तथा कृष्णः सर्वभूतक्षयस्तथा ।
कृष्णश्च श्रीनिकेतश्च स्वक्षणभङ्गसौहृदः ।।१३८।।

श्रीरमणस्तथा कृष्णस्तथा सर्वसुहृद्वृतः ।
कृष्णश्च शिवरूपी च कृष्णश्च सात्वतर्षभः ।।१३९।।

शरणदस्तथा कृष्णः सात्वतां प्रवरस्तथा ।
कृष्णश्च सर्वमूर्तिश्च ज्ञातिपरिवृतस्तथा ।।१४०।।

कृष्ण: सत्यपरश्चैव सुसुन्दरवरस्तथा ।
सत्यव्रतस्तथा कृष्णस्तथा सर्वफलप्रदः ॥१४१॥

कृष्णश्च सत्ययोनिश्च कृष्णः सत्यात्मकस्तथा ।
सुसत्यनिहितः कृष्णस्तथा च सदनुग्रहः ॥१४२॥

सत्यसत्यस्तथा कृष्णस्तथा कृष्णः सतां पतिः ।
सर्वव्याकृतसिद्धिश्च क्षेमधामा तथा स्वयम् ॥१४३॥

कृष्णः सतः प्रसूतिश्च कृष्णश्च सहलायुधः ।
सर्वाध्यक्षस्तथा कृष्णो ज्ञप्तिमात्रस्तथा स्वयम् ॥१४४॥

कृष्णश्च सन्निधानश्च कृष्णश्च सर्वबुद्धिदृक् ।
कृष्णश्च सर्वधर्मज्ञः क्षुत्क्षान्तश्च तथा स्वयम् ॥१४५॥

कृष्णः सर्वसुराध्यक्षस्तथा कृष्णः सतां गतिः ।
स्वच्छन्दोपात्तदेहश्च सेतुकर्ता तथा स्वयम् ॥१४६॥

कृष्णश्च सात्वतां भर्ता कृष्णश्च सप्तहायनः ।
कृष्णश्च सर्वबीजश्च स्वायुधाढ्यस्तथा स्वयम् ॥१४७॥

कृष्णश्च स्तन्यकामश्च कृष्णः सुभ्रूस्त्रसस्तथा ।
कृष्णः सुरतनाथश्च साधिभूतस्तथा स्वयम् ॥१४८॥

कृष्णः संजातकोपश्च तथा कृष्णः सुरोत्तमः ।
कृष्णश्च सत्यकामश्च साधिदैवस्तथा स्वयम् ॥१४९॥

कृष्णः सप्रातराशश्च स्त्रीरत्नैरन्वितस्तथा ।
कृष्णः संधितवेणुश्च हतपाप्मा तथा स्वयम् ॥१५०॥

सपाणिकवलः कृष्णः सतां शरणदस्तथा ।
कृष्णः सर्वस्वरूपश्च कृष्णः संकर्षणस्तथा ॥१५१॥

कृष्णः स्वच्छन्दवर्ती च हिरण्यपरिधिस्तथा ।
सुस्मितसुन्दरास्यश्च कृष्णो हृदीकृतस्तथा ॥१५२॥

कृष्णश्च सर्वजीवश्च कृष्णश्च त्रिगुणाग्रहः ।
कृष्णश्च सुमहात्मा च सुत्रिलोकगुरुस्तथा ॥१५३॥

सुसर्वभूतगोप्ता च कृष्णश्च ज्ञानविग्रहः ।
कृष्णश्च सर्वभूतात्मा सर्वप्रत्ययहेतुकः ॥१५४॥

कृष्णश्च सत्यसंकल्पः कृष्णः सूकरमूर्तिकः ।
कृष्णः समाप्तसर्वार्थः स्वत्रिगुणाभिमानकः ॥१५५॥

स्वक्षितिराक्षसध्रुक्चैव कृष्णस्त्रैलोक्यकान्तकः ।
सुगदितानुभावश्च मदघूर्णितलोचनः ॥१५६॥

सुदेवप्रवरः कृष्णः स्वगृहकुपितस्तथा ।
स्वगुणापिहितः कृष्णः सुगाढरशनस्तथा ॥१५७॥

इप्सितकन्यावरश्च
कृष्णो मानिनीदर्पहरस्मितः ।

अवनिक्ताङ्घ्रियुगलश्च
कृष्णो यदुवृष्णिसात्वतां धुर्यः ॥१५८॥

ईडितमनोज्ञकथश्च
रमालालितपादपल्लवस्तथा ।

उपगीयमानचरितो
निर्योगपाशकृतलक्षणः ॥१५९॥

अधरबिम्बदत्तवेणु—
रजेयभटशेखरिताङ्घ्रिरेणुश्च ।
अनुगीतपवित्रकीर्ति—
—रूपगीयमानमाहात्म्यश्च ॥१६०॥

अखिलकलादिगुरुस्तथा
कुन्ददामकृतकौतुकवेषश्च ।
आत्तयोगमायाकृति—
—रुत्तमश्लोकशिखामणिश्च ॥१६१॥

गोपीदृगुत्सवदृशि—
र्यो देवकीजठरभूरुडुराजः ।
खलसंयमनावतारो
गोरजश्छुरितकुन्तलश्च ॥१६२॥

ऋतसत्यनेत्रस्तथा
यो निजजनस्मयध्वंसनस्मितः ।
खुररजश्छुरितस्रग् च
–म्लेक्षप्रायक्षत्रहन्ता ॥१६३॥

गिरित्ररमार्चिताङ्घ्रि–
–र्वामबाहुकृतवामकपोलः कृष्णः ।
चारुप्रसन्नवदनो
यो नरलोचनपानपात्रः ॥१६४॥

द्विरदराविहारके
गृहानपगो नित्यसुखबोधतनुः ।
नागभोगपरिवीतो
यो वनितोत्सवरूपशीलः ॥१६५॥

यो दर्शनीयतिलको
यदूनां गोप्ता परमहंसगतिः ।
प्रलम्बपीवरभुजः स
कृष्णो वन्द्यमानचरणश्च ॥१६६॥

सर्वविद्याप्रभवो–
नित्यनिवृत्तमायागुणप्रवाहः ।
विशुद्धविज्ञानघनो
यः सुकुमारघनावदातः ॥१६७॥

सर्वभूतप्रभवो–
योगेश्वरान्तर्हृदिकल्पितासनः ।
स्वर्गापवर्गविरमः
कृष्णः समनुवर्णितवीर्यः ॥१६८॥

बदरपाण्डुवदनो–
विरूढस्वेदकणिकावदनाम्बुरुहः ।
भुजंगभोगपरीतः
कृष्णः स्रगवतंसविलासः ॥१६९॥

समस्तपुरुषार्थमयो
विश्वोपदर्शी व्रजभयार्तिहरः ।
सहपशुपालबलो यः
कृष्णो ज्ञानविज्ञाननिधिः ॥१७०॥

इत्येतत्कृष्णसंख्यानं काव्यसाहित्यसौभगम् ।
प्रेमिणो भावकस्यापि श्रेयःप्रेयःप्रदायकम् ॥१७१॥

॥ इति शम् ॥